# ॥ श्रीअरुणाचलेश्वराष्टोत्तरशतनामावली ॥

ॐ श्रीगणेशाय नमः ।
ॐ अखण्डज्योतिस्वरूपाय नमः ॥ १
ॐ अरुणाचलेश्वराय नमः ।
ॐ आदिलिङ्गाय नमः ।
ॐ ब्रह्ममुरारी सुरार्चिताय नमः ।
ॐ अरुणगिरिरूपाय नमः ।
ॐ सिद्धिरूपाय नमः ।
ॐ अरुणाद्रिशिखरवासाय नमः ।
ॐ हृदयनटेश्वराय नमः ।
ॐ आत्मने नमः ।
ॐ अर्धनारीश्वराय नमः ॥ १०
ॐ शक्तिसमन्विताय नमः ।
ॐ आदिगुरुमूर्तये नमः ।
ॐ सृष्टिस्थितिलयकरणाय नमः ।
ॐ सच्चिदानन्दस्वरूपाय नमः ।
ॐ करुणामूर्तसागराय नमः ।
ॐ आद्यन्तरहिताय नमः ।
ॐ विश्वेश्वराय नमः ।
ॐ विश्वरूपाय नमः ।
ॐ विश्ववन्द्याय नमः ।
ॐ अष्टदारिद्र्यविनाशकाय नमः ॥ २०
ॐ नरकान्तककारणाय नमः ।
ॐ जटाधराय नमः ।
ॐ गौरीप्रियाय नमः ।
ॐ कालान्तकाय नमः ।
ॐ गङ्गाधराय नमः ।
ॐ गजराजविमर्दनाय नमः ।
ॐ भक्तिप्रियाय नमः ।
ॐ भवरोगभयापहाय नमः ।
ॐ शङ्कराय नमः ।
ॐ मणिकुण्डलमण्डिताय नमः ॥ ३०
ॐ चन्द्रशेखराय नमः ।
ॐ मुक्तिदायकाय नमः ।
ॐ सर्वाधाराय नमः ।
ॐ शिवाय नमः ।
ॐ जन्मदुःखविनाशकाय नमः ।
ॐ कामदहनाय नमः ।

ॐ रावणदर्पविनाशकाय नमः ।
ॐ सुगन्धलेपिताय नमः ।
ॐ सिद्धसुरासुरवन्दिताय नमः ।
ॐ दक्षसुयज्ञविनाशकाय नमः ॥ ४०
ॐ पङ्कजहरसुशोभिताय नमः ।
ॐ सञ्चितपापविनाशकाय नमः ।
ॐ गौतमादिमुनिपूजिताय नमः ।
ॐ निर्मलाय नमः ।
ॐ परब्रह्मणे नमः ।
ॐ महादेवाय नमः ।
ॐ त्रिशूलधराय नमः ।
ॐ पार्वतीहृदयवल्लभाय नमः ।
ॐ प्रमथनाथाय नमः ।
ॐ वामदेवाय नमः ॥ ५०
ॐ रुद्राय नमः ।
ॐ श्रीनीलकण्ठाय नमः ।
ॐ ऋषभध्वजाय नमः ।
ॐ ऋषभवाहनाय नमः ।
ॐ पञ्चवक्त्राय नमः ।
ॐ पशुपते नमः ।
ॐ पशुपाशविमोचकाय नमः ।
ॐ सर्वज्ञाय नमः ।
ॐ भस्माङ्गरागाय नमः ।
ॐ नृकपालकलापमालाय नमः ॥ ६०
ॐ मृत्युञ्जयाय नमः ।
ॐ त्रिनयनाय नमः ।
ॐ त्रिगुणातीताय नमः ।
ॐ त्रिभुवनेश्वराय नमः ।
ॐ नारायणप्रियाय नमः ।
ॐ सगुणाय नमः ।
ॐ निर्गुणाय नमः ।
ॐ महेश्वराय नमः ।
ॐ पूर्णरूपाय नमः ।
ॐ ओङ्काररूपाय नमः ॥ ७०
ॐ ओङ्कारवेद्याय नमः ।
ॐ तुर्यातीताय नमः ।
ॐ अद्वैताय नमः ।
ॐ तपोगम्याय नमः ।

ॐ श्रुतिज्ञानगम्याय नमः ।
ॐ ज्ञानस्वरूपाय नमः ।
ॐ दक्षिणामूर्तये नमः ।
ॐ मौनमुद्राधराय नमः ।
ॐ मौनव्याख्याप्रकटितपरब्रह्मतत्त्वाय नमः ।
ॐ चिन्मुद्राय नमः ॥ ८०
ॐ सिद्धिबुद्धिप्रदायाय नमः ।
ॐ ज्ञानवैराग्यसिद्धिप्रदायाय नमः ।
ॐ सहजसमाधिस्थिताय नमः ।
ॐ हंसैकपालधराय नमः ।
ॐ करिचर्माम्बरधराय नमः ।
ॐ श्रीरमणप्रियाय नमः ।
ॐ अचलाय नमः ।
ॐ श्रीलक्ष्मणप्रियाय नमः ।
ॐ चिन्मयाय नमः ।
ॐ श्रीशारदाप्रियाय नमः ॥ ९०
ॐ गौरिवदनाब्जवृन्द सूर्याय नमः ।
ॐ नागेन्द्रहाराय नमः ।
ॐ यक्षस्वरूपाय नमः ।
ॐ भुक्तिमुक्तिप्रदाय नमः ।
ॐ सर्वसुन्दराय नमः ।
ॐ शरणागतवत्सलाय नमः ।
ॐ सर्वभूतात्मने नमः ।
ॐ मृत्योर्मृत्युस्वरूपाय नमः ।
ॐ दिगम्बराय नमः ।
ॐ देशकालातीताय नमः ॥ १००
ॐ महापापहराय नमः ।
ॐ नित्याय नमः ।
ॐ निराश्रयाय नमः ।
ॐ नित्यशुद्धाय नमः ।
ॐ निश्चिन्ताय नमः ।
ॐ मनोवाचामगोचराय नमः ।
ॐ शिवज्ञानप्रदाय नमः ।
ॐ शाश्वताय नमः ॥ १०८
इति श्रीलक्ष्मणभगवद्विरचिता
श्रीमदरुणाचलेश्वराष्टोत्तरशतनामावली
सम्पूर्णा ।